रथारोहेऽथ तौ दत्तहस्तालम्बलसद्रसौ ।
नाक्रष्टुमशकत्पार्थो नारोढुं च हरिस्वसा ॥ ४ ॥
दधत्या स्यन्दनारोहे चापल्यमथ बालया ।
तडिल्लतायितं मेघभासो वासवजन्मनः ॥ ५ ॥
रथास्यप्रथमोत्पातः पार्थस्याभवदुत्सवः ।
प्रियया प्रथमाश्लिष्टकण्ठपीठस्य भीतया ॥ ६ ॥
रथस्खलनभीलोलकान्तालिङ्गितवक्षसः ।
पार्थस्य रैवतप्रान्तोपलैश्चिन्तामणीयितम् ॥ ७ ॥
लोलाः कोलाहलभृतः पार्थभ्रूभङ्गभङ्गुराः ।
सुभद्रारक्षका जग्मुर्बलभद्रसभामथ ॥ ८ ॥
सुभद्रा सम्प्रति स्वामिन् रैवतावनिसीमनि ।
याता मन्मथपूजार्थं पार्थेनापहृता हठात् ॥ ९ ॥
इत्याकर्ण्य तदा सीरी सकम्पमधरं दधौ ।
सद्योहृदीप्तकोपाग्निनवकीलाशिखासखम् ॥ १० ॥
सौनन्दिनः सदामद्यपानपाटलिते दृशौ ।
पतन्त्यौ मुहुरस्त्रेषु व्यञ्जयामासतुः क्रुधम् ॥ ११ ॥
अदर्शि बलदेवस्य कपोलामलदर्पणे ।
तरुणारुणिमच्छद्मा प्रकोपः प्रतिबिम्बितः ॥ १२ ॥
कोपे बलस्य नापीडि दष्टोऽप्योष्ठस्तदा रदैः ।
आसक्तरेवतीदन्तसन्तताभ्यासभासुरः ॥ १३ ॥
रत्नपादासने पार्ष्णिपिष्टे घर्माम्बुवाहिते ।
अङ्घ्रिक्षोदद्रुटिपन्मौलिक्षतजस्यास्मरद्धलः ॥ १४ ॥
कपिशाः कम्पिनोऽभीक्ष्णमाटोपादुत्पतिष्णवः ।
अवापुः कोपदावाग्निकीलालीलां सभाभटाः ॥ १५ ॥
अभिधित्सन् गदः किञ्चित् प्रस्तुतेऽदोहदान्मुरे ।
लोलां जिह्वां प्रकोपस्य हृद्राजस्तर्जनीमिव ॥ १६ ॥
प्रौढोपनतसङ्ग्रामोदश्चद्रोमाश्रकञ्चुकः ।
प्रद्योऽङ्गीकृतवर्मैव कृतवर्मा व्यराजत ॥ १७ ॥
यथा चपेटया कुप्यत्कृतमातत मात्यकिः ।
तथा यदि भुवं हन्यात्करोऽप्यस्याः क मङ्क्ष्येत् ॥ १८ ॥

स्मरश्चापशरैः पौष्पैरपि विश्वत्रयीजयी ।
तीव्रास्त्रेषु क्षिपन्नक्षि त्र्यक्षस्यापि भयं व्यधात् ॥ १९ ॥
अङ्गुल्यङ्गुष्ठमर्दैन भूपारत्नान्युपापतिः ।
प्रकोपे तीव्रतसाङ्गदग्धानीव व्यचूर्णयत् ॥ २० ॥
ग्रासागतमिव ध्यायन्नुत्सुकः शात्रवं शिरः ।
क्रुद्धः स्फुरत्कटत्कारं निष्पिपेष रदान् रदैः ॥ २१ ॥
दन्तपङ्क्तिमिथःपेषस्फुलिङ्गावलिमालिनीम् ।
ज्वालां कोपानलस्येव दधौ जिह्वां गवेषणः ॥ २२ ॥
ध्वनिः शनैरभूत्पाणिप्रहतस्तम्भसम्भवः ।
क्षुभ्यदम्भोनिधिभ्रंश्यद्भूधरः स्फुटदम्बरः ॥ २३ ॥
घूर्णीकृताङ्गुलीमुद्रावज्रेणाताडयद्भुवम् ।
भुजसर्पाङ्गभुजङ्गेन्द्रपीडिना पाणिना पृथुः ॥ २४ ॥
यथार्धवर्णमुत्थाप्य किञ्चिद्भूभङ्गसञ्ज्ञया ।
अधोर्ध्वस्थितमित्यूचे सीरी संरम्भया गिरा ॥ २५ ॥
याहैर्मन्त्वरैः पार्थं गच्छेदं मद्गिरा वद ।
क रे व्रजसि दौर्मत्यपृथावस्कर तस्कर ॥ २६ ॥
कौलिन्यं कलिवीरत्वं विठत्ता शस्त्रवेदिता ।
सौहार्दं च त्वयामर्दि सर्वमेकपदे हहा ॥ २७ ॥
त्वां वंशपांसनं प्राप्य सुव्रतद्रयो वियोगिनाम् ।
इन्दुः सर्वाङ्गविस्तीर्णकलङ्कोऽत्र भविष्यति ॥ २८ ॥
धृतेऽस्मिन्निजसूनोस्ते श्रुते सदसि लज्जितः ।
सर्वाङ्गीणानिमेषाक्षो यशो वर्त्स्यते कथम् ॥ २९ ॥
ख्यातः सम्या त्वया साक्षादस्माकं गर्वपर्वतः ।
ऐन्द्रे त्वं भवता भित्त्वा दर्शितैव कुलीनता ॥ ३० ॥
मूढैरस्माभिरद्यापि मूर यत्त्वयि सौहृदम् ।
तद्विपेऽपि सुधाबुद्धिरङ्गारेऽपि मणिप्रभा ॥ ३१ ॥
उक्त्वा कोपकणं सीरदारिते त्वद्गुरःस्थले ।
प्रतापपादपं विश्वव्यापिनं वर्धयेऽधुना ॥ ३२ ॥
भवन्तं तुषवद्भस्मीकृत्याद्य मुशलाहतैः ।
धानयिष्ये भवद्बन्धुनिश्वासैः कीर्तिनन्दुलान् ॥ ३३ ॥

स्थिरीभव क्व गन्तासि मयोपक्रियतां तव ।
दर्शयिष्येऽसिदण्डेन स्वर्गं पापीयसोऽपि यत् ॥ ३४ ॥
कुलजीवितमस्माकं कन्येयं भवता हृता ।
त्वामेकमेव मे हन्तुः क्व भविष्यति निर्वृतिः ॥ ३५ ॥
राधा यत्काकनालीयनीत्या विद्धार्जितं यशः ।
तस्मे लुप्त्वाद्य वक्त्राणि स्मेरयिष्ये धनुष्मताम् ॥ ३६ ॥
रे चौर यदि सौजन्यं तादृक्षमपि विस्मृतम् ।
तत्किं महामपादोऽपि विस्मृतोऽरिकपालभित् ॥ ३७ ॥
साध्वसध्वस्तधैर्यस्य तव मौलिं प्रपिंपति ।
मदङ्घ्रौ त्वच्छिरोरत्नाङ्कुराः क्षतिकरा यदि ॥ ३८ ॥
हृदयात् कृष्णमुत्तार्य त्वयेदं दुष्कृतं कृतम् ।
निःशङ्कमिति सीरेण करिष्ये तद्द्विधा तव ॥ ३९ ॥
इत्युक्त्वा प्रेष्य तं दूतं कामपालः करालदृक् ।
उवाच कृतवर्माणं क्रोधस्खलितया गिरा ॥ ४० ॥
सेनामेनां समादाय गच्छ सत्सत्त्व सत्वरम् ।
तथा कुरु यथा नायं जीवन् याति मलिम्लुचः ॥ ४१ ॥
उत्तिष्ठोत्तिष्ठ युद्धैकमहासात्त्विक सात्यके ।
गच्छामीभिः समं भूपैर्गृह्यतां गृह्यतां शठः ॥ ४२ ॥
हन्त मा स्म विलम्बन्त भवन्तः सन्ततोज्ज्वलाः ।
पृष्ठेऽहं भास एवैष पुरस्कृत्य मुरद्विषम् ॥ ४३ ॥
इत्यादेशं समासाद्य कृतवर्मादयोऽचलन् ।
दृश्यदृष्टपुरोभागहृत्स्पन्दस्फोतता: ॥ ४४ ॥
सेनायाः कोऽप्यभूद्वेगस्तदार्जुनजिघृक्षया ।
श्वासोऽपि येन निर्मुक्त उच्छ्वासायानुधावितः ॥ ४५ ॥
इतः पुरःस्फुरत्क्रूरज्यद्लोचनरोचिषा ।
दहन्निव दिवं मूर्तकोपपावककीलया ॥ ४६ ॥
पादसम्पातसंरम्भपीडया मूर्च्छितामिव ।
सिञ्चन्समर्पघर्माम्भःपूरैरुर्वीं पदे पदे ॥ ४७ ॥
मुग्धामधुतनन्मिथ्रोपालम्भैरिव भारितम् ।
वेपमानं वहन्नोष्ठं ययौ सीरी हरिं प्रति ॥ ४८ ॥ (विशेषकम्)

हृदन्तर्दीप्तकोपाग्निस्फुलिङ्गैरिव दाहिभिः ।
अथाक्षरैः खरां वाचमित्युवाचाच्युतं प्रति ॥ ४९ ॥
स कुलीनः कलाशाली शूरः साहसिकाग्रणीः ।
सुहृत्त्वापुपन्मैत्रीमद्याप्युत्तिष्ठसे न किम् ॥ ५० ॥
निजं प्रकटितं तेन शौर्यं चौर्यं वितन्वता ।
अनन्विष्यंस्त्वमप्येनं शौरे शूरो भविष्यसि ॥ ५१ ॥
श्वभ्रे स याति चेत्तत्वं हन्मि भूम्याङ्घ्रितुलया।
यदि याति दिवं दुष्टस्तत्साध्यं सिद्धमेव मे ॥ ५२ ॥
वध्यः सुहृदपि स्नेहक्षयक्षीबो बलीयसाम् ।
वायुरग्निवयस्योऽपि निर्वापयति दीपकम् ॥ ५३ ॥
पद्मश्रीहरणव्यग्रः प्रत्यूषे पद्मबन्धुना ।
वर्धितोऽपि स्वयं पश्य कां दशां नीयते शशी ॥ ५४ ॥
अपदोऽप्यसकर्णोऽपि लङ्घ्यमानो दशत्यहिः ।
परिभूतोऽप्यनुयोगी त्वं तस्मादपि हीयसे ॥ ५५ ॥
विलम्बयति सौहार्दं यद्येनं प्रति सम्प्रति ।
तत्सङ्कटस्व तेनैव द्वावप्यङ्गीकृतौ मया ॥ ५६ ॥
कौन्तेये सहजा मैत्री कृत्रिमत्वेन वर्धिता ।
सोऽप्यभूत् कृत्रिमः शत्रुरथ तत्किमुपेक्ष्यते ॥ ५७ ॥
विरुद्धः स्वोऽपि हन्तव्यो हन्ति प्रत्युत रक्षितः ।
निजाङ्गजोऽपि रोगः स्यादच्छिन्नः किं न मृत्यवे ॥ ५८ ॥
अमर्षमिव वर्षन्तमिति निष्ठुरया गिरा ।
सुधीः सान्त्वयितुं ज्येष्ठं चक्रपाणिः प्रचक्रमे ॥ ५९ ॥
त्वदादेशविधेयोऽस्मि किमार्य मयि कुप्यसि ।
यद् कार्ये प्रवर्त्तन्ते धीमन्तः सहसैव किम् ॥ ६० ॥
सहसा महसा दत्तां वीक्ष्य दीपे झलज्झलाम् ।
मणिभ्रान्त्या पतन्तः कां लभन्ते शलभा दशाम् ॥ ६१ ॥
सुधांशुधाममभिधौते सुखशायिनि पन्नगे ।
अध्यात्वा हारबुद्ध्या कः क्षिपन्पाणिं न शोचते ॥ ६२ ॥
भद्रं यात्येव जीमूते गर्जितर्जितदिग्गजे ।
उत्पतत्करटिभ्रान्त्या सहसा साहसी हरिः ॥ ६३ ॥

वशीभवन्ति विश्वानि विनमन्ति स्वयं द्विपः ।
पुरः स्फुरति दासीव श्रीर्विमृश्यविधायिनाम् ॥ ६४ ॥
निर्विवेके निरुत्साहाः साहसिन्यपि सम्पदः ।
भूरिभूपाभिरामेऽपि कामिन्य इव दुर्भगे ॥ ६५ ॥
दर्पिपेपेऽपि मुञ्चन्ति मृदुत्वं न कलाभृतः ।
तमो हन्ति रविध्वान्तं तदेव शिशिरः शशी ॥ ६६ ॥
पश्योष्णशीतयोः स्फीतमन्तरं तरवो यतः ।
दवदग्धाः प्ररोहन्ति न सिन्धून्मूलिता पुनः ॥ ६७ ॥
मतिप्रतानिनीं कश्चित् शास्त्रार्थजलशाड्वलाम् ।
दग्धापि क्रोधदावेन जयाख्यं फलमीहते ॥ ६८ ॥
शौर्यधैर्यावधौ पार्थे व्यापृता पृतना कुतः ।
सहसैव त्वया दीप्ते हुताशन इवाहुतिः ॥ ६९ ॥
धीमान्धृतद्युताहृतस्वजनव्रजचेष्टितः ।
धन्वी धनञ्जयस्तावदावाभ्यामपि दुर्जयः ॥ ७० ॥
दासीव स्वेच्छया यस्य मृतिरायाति याति वा ।
स केन रुध्यते युद्धकुपितस्तत्पितामहः ॥ ७१ ॥
निघ्नन्तं हन्त चापेन द्रोणं शापेन वा युधि ।
धनुर्वेदे च वेदे च दक्षं कक्षीकरोतु कः ॥ ७२ ॥
जेष्यन्ते केन धावन्तः कौरवाः पार्थगौरवात् ।
सद्रोत्थवज्रवर्मत्वक् कर्णो येषां सखा पुरः ॥ ७३ ॥
भ्रदयद्भूमिधरां भ्राम्यद्भदासत्कारसत्कृताम् ।
सोढा दृशामपि स्वल्पः को विद्रुप्यविदम्बिनः ॥ ७४ ॥
सन्त्यन्ये बन्धुरोधेन क्रुध्येद्यदि युधिष्ठिरः ।
तत्ताद्दृक्पानवज्राग्नौ क त्वं काहं क वा जगत् ॥ ७५ ॥
तेन सार्द्धमिति स्पर्द्धा युद्धे विजयसंशयः ।
किन्तु चिन्त्य निःशेषकुलापचयनिश्चयः ॥ ७६ ॥
को वा कोपोऽर्जुने तस्मिन्सा स्वयं रागिणी ययौ ।
स्वसुः कथाप्यसौ लज्जाकृते कोपस्य कः क्रमः ॥ ७७ ॥
कन्या कस्यापि देयैव हीनः केन गुणेन सः ।
कुन्तीकुक्षिसरोहंसः कुरुवंशशिरोमणिः ॥ ७८ ॥

हरः पर इवैश्वर्ये शास्त्रे गुरुरिवापरः ।
स्मरोऽन्य इव सौन्दर्ये शौर्ये किन्तु स एव सः ॥ ७९ ॥
तत्कोपस्त्यज्यतां तस्मै स्वसेयं दीयतां स्वयम् ।
आवां गच्छाव एवाशु सैन्यं यावन्न हन्यते ॥ ८० ॥
इति हलभृतो विश्वस्वामी सुधोर्मिकिरा गिरा
विषमिव रुषं मन्त्रज्ञोऽसावपास्य शनैः शनैः ।
अचलदचलप्रेमा क्षेमङ्करोऽथ किरीटिने ।
स सममुना तूर्णं पूर्णाभिलाषलसन्मनाः ॥ ८१ ॥

इति श्रीगूर्जरेश्वरमहामात्यश्रीवसन्तपालविरचिते नरनारायणानन्दनाम्नि महाकाव्ये सुभद्राहरणो नाम द्वादशः सर्गः ॥

शूरो रणेषु चरणप्रणतेषु सोमो वक्रोऽतिवक्रचरितेषु बुधोऽर्थबोधे ।
नीतौ गुरुः कृतिजने कविरक्रियासु मन्दोऽपि च ग्रहमयो न हि वस्तुपालः ॥ १२ ॥

## त्रयोदशः सर्गः

स्मितशक्तिरितोऽपि कोपतश्चरयाक्यैः समरार्थमात्थ पार्थः ।
अपि धन्विभिरन्वगामि भूपैः कृतवर्मादिभिरात्तरौद्ररोपैः ॥ १ ॥
प्रथमाहितदूतहूतभीष्मप्रमुखात्मीयसमग्रवर्गदुर्गः ।
समनीनहदच्युतो पृथाभूः पृतनां शत्रुषु योद्धुमुद्धुरेषु ॥ २ ॥
अथ तस्य चमूयुगस्य तूर्यध्वनितैः कर्णरसायनैर्भटानाम् ।
शुकमन्दरकन्दरोदरोत्थप्रतिशब्दद्विगुणैर्जगज्जगाहे ॥ ३ ॥
इति वर्मभृतः क्षणेन दत्त्वा चिरदाक्षिण्यवशात्कृशं प्रियासु ।
प्रणिपत्य गुरूनिवर्तिताक्ष्णा वरवीराः समरश्रिये विलेसुः ॥ ४ ॥
परिरम्भपरप्रियाकुचाग्रश्लथबन्धं रणतूर्यतर्जितात्मा ।
कवचं पुलकोच्चयप्रपञ्चैस्त्रटिति त्रोटयति स्म कोऽपि वीरः ॥ ५ ॥
परिरम्भिणि वल्लभे रणान्तर्गमनोत्के कृतकं परा हसन्ती ।
कलिताशकुनार्त्तिरेष मा भूदिति दक्षाभिनिनाय हर्षमिश्रैः ॥ ६ ॥
अपि चाटुगिरा प्रिये समन्तादददाने परिरम्भणं रणोत्के ।
चलितेऽपि च धीरपादपातं पुलकं काचिदुवाह वीरपत्नी ॥ ७ ॥
अपि धीरशिरोमणिः पिता मे पिब्यां तुभ्यमदत्त कातराय ।
विमनस्कमवेक्ष्य युद्धयुद्धा प्रियमुत्साहयति स्म काचिदित्थम् ॥ ८ ॥

समरोत्सवसम्पदुत्सुकोऽन्यः स्वयमङ्गीकृतलोहघातपातः ।
रतयाचनवाचि वल्लभायां कुसुमेषोरिषुभिः क पीड्यते स्म ॥ ९ ॥
अपि चार्द्रकरोऽधुना ह्रियेऽसाविति धैर्येण निवार्य पाणिकम्पम् ।
तिलकं समरोत्सुकस्य सूनो रचिताशीर्वचनं चकार काचित् ॥ १० ॥
जनकेन सहोदरेण भर्त्रा मम भग्नोऽयमिति श्रुतिर्न दत्ता ।
इदमश्रुतपूर्वमद्य रक्ष्यं भवतेत्याह सुतं रणोत्कमेका ॥ ११ ॥
हृदि मे दयितास्ति तद्गतं प्राग्युधि साप्स्यत्यति तत्र कातराक्षी ।
रमणीं रसिकः पुरोऽप्यपश्यन्निति कश्चिच्चपलं चचाल वीरः ॥ १२ ॥
करकं जलपूरितं वहन्त्यां चलितायां सममेव वल्लभायाम् ।
युधि कोऽपि रसेन कम्पमानः सुभटो भीत इवेतरैरशङ्कि ॥ १३ ॥
परिरम्भपरम्परां प्रियायै गृहसर्वस्वमपि द्विजाय दत्त्वा ।
रिपुमूर्ध्नि पदं प्रभौ जयं च प्रसभं दातुमथाचलद्भटौघः ॥ १४ ॥
बलमिन्द्रसुतस्य जेतुमेके ध्रुवमिन्द्रावरजस्य तूर्णमन्ये ।
अचलश्चचला इवेन्द्रवैरप्रगुणा वारिदगर्जिनो गजेन्द्राः ॥ १५ ॥
बलयोर्वलिनो हयाः प्रसस्रुः कवलीकर्त्तुमिवारिवीरवारम् ।
प्रविदीर्णकृतान्तवक्त्रकुक्षोपमदूरोन्नमिताग्रपादफालाः ॥ १६ ॥
रथिनामिव कीर्तिभिः सिताभिः स्फुटनृत्तप्रगुणाभिरङ्गिनीभिः ।
नवकेतनमञ्जरीभिरुच्चैरुचितव्योमपथा रथाः प्रचेलुः ॥ १७ ॥
रथचित्कृतिसिंहनादहेषागजगर्जानिनदो मदोष्मभाजाम् ।
कवलीकृतदिग्गणोऽपि दूरं हठहक्कासु भुजाभृतां ममज्ज ॥ १८ ॥
चलितेषु बलेषु शेषकूर्मेश्वरदिक्कुञ्जरशैलमुक्तभारा ।
वरवीरविविक्तसत्त्वसिन्धौ तरणेव बभौ मही विलोला ॥ १९ ॥
चलिते चपलं बलद्वयेऽस्मिन्नुदयद्धूलिभरच्छलादधारि ।
समुदेष्यदुदारबाणवारक्षतिभीत्या वियतापि वारबाणम् ॥ २० ॥
यमपाणिपुटीसमप्रणुन्नाविव घोरारवमाभिमुख्यभाजौ ।
अथ तालरयेण नर्त्तयन्तौ रूपमग्रे मिलितौ बलाम्बुधी तौ ॥ २१ ॥
सुभटः सुभटं रथी रथस्थं तुरगस्थं तुरगी गजं गजश्च ।
समवाप पुरःप्रयुक्तचित्तप्रबलाकृष्टिबलैरिवोरुवेगम् ॥ २२ ॥
द्विपतां क्षतजं चिराय पेयं ध्रुवमद्येति मुदा प्रवृत्तनृत्तैः ।
असिभिर्यमकिङ्करानुकारैरतिरौद्राः सुभटा मिथोऽभिजग्मुः ॥ २३ ॥

चरणोद्धतधूलिधूमिताशा दृढखड्गाहतिविस्फुटस्फुलिङ्गाः।
मणिकञ्चुकदीपिनोऽथ देहुर्युधि ते कोपदवा इवाङ्गवन्तः ॥ २४ ॥
प्रतिघातविनिस्सृतां पुरस्तात्पदचारस्खलनोकुरापराधाम्।
असिनाऽन्त्रततिं विकृत्य कोपाच्चलितः कोऽपि जघान वैरिवीरम् ॥ २५ ॥
कृतहुङ्कृतिकम्पितोष्ठमन्तर्वत मन्त्रं कमपि ध्रुवं जपन्तौ।
अपरौ करवालसर्पदंशात्पतितावाशु मिथो नरेन्द्रवीरौ ॥ २६ ॥
अरिपु प्रबलप्रकोपदृक्षाध्वनितैरेव भयोज्झितायुधेपु।
युधि कस्यचिदक्षितेजसैव क्षतजालिप्त इवाभवत्कृपाणः ॥ २७ ॥
युधि कोऽपि ददर्श कुम्भिकुम्भौ स्मृतकान्ताकुचविभ्रमच्युतास्त्रः।
अपि तस्य कराङ्कलीलया तौ त्रुटितौ तु क्व किलात्र तद्वृढत्वम् ॥ २८ ॥
अपरो हरिसारथीनभिन्दन्नुदितक्षत्रचरित्रधीपवित्रः।
रथिनः परिपातयन् रथौघं व्यधित प्रागिव सज्जितं रथिभ्यः ॥ २९ ॥
असिघातहतैककोरुमूलं तुरगेभ्यश्चतुरोऽश्ववारवारम्।
परिपात्य परोऽङ्घ्रिपार्ष्णिपाते त्रटिति क्षुण्णकलापकं जघान ॥ ३० ॥
परिणन्तुमुदग्रदन्तदण्डाः स्फुटमन्योन्यकृताद्रिपादशङ्काः।
मदनिर्झरझात्कृतोऽभ्यधावन्नभितः कुम्भिधराः करानुदस्य ॥ ३१ ॥
अमिलन्करिणो रणेऽभिषिक्ताः स्वयमन्योन्यकरोत्थशीकरौघैः।
दशनाग्रमिथोहतिस्फुलिङ्गस्फुटनीराजनराजिराजमानाः ॥ ३२ ॥
समुदस्य करी करीन्द्रमेकः करलीलाकुतुकान्नभोऽन्तराले।
क्षितिभङ्गभियेव दन्तवासे निपतन्तं बिभराम्बभूव भूयः ॥ ३३ ॥
अपरः प्रविघोरदन्तघातो युधि विद्राव्य परद्विपं द्विपेन्द्रः।
अपि वैरिजिताय शाश्वतानि प्रददौ स्वीयनिषादिने यशांसि ॥ ३४ ॥
निजघान विभग्नदन्तमग्रे करिणं वीक्ष्य कृपाभ्युदस्तहस्तम्।
युधि कोपनकुम्भिनोभियेभः किल नश्यन् जयिनं तमेव तेने ॥ ३५ ॥
रणभग्नरदोऽपि शुण्डयाशु स्वयमुत्पाट्य रदं रिपुद्विपस्य।
निचखान स एव तस्य मौलौ विजयस्तम्भमिवात्मनो महेभः ॥ ३६ ॥
रथमेकरथाङ्गमुज्झ्य तूर्णं परिपूर्णं तु गृहाण कश्चिदेषु।
युधि कोऽपि महानितीव दन्ती दिवि मित्राय रथाग्रमुद्ददासे ॥ ३७ ॥
करिणा युधि केनचित्प्रयुक्तः प्रसभं युग्मरणोद्धतो भटौघः।
गगनेऽपि मिथःकृतप्रमाथस्त्रिदशोभिः सविधे मुदैव चक्रे ॥ ३८ ॥

प्रहिता वलगौरवेण पूर्वं करिणा केनचिदम्बरे तुरङ्गाः ।
अपतन् भुवि नित्यदत्तफालप्रथिताभ्याससुखेन चाश्ववाराः ॥ ३९ ॥
मणिमण्डनमण्डलीमयूखच्छुरिताङ्गा हरयो महारयेण ।
अभिपेतु रथाग्रभागजाग्रद्धवबुध्यैव मिथोऽपि सत्त्वभाजः ॥ ४० ॥
हयहेषितनूयमानमानोङ्कुरहङ्कारचकारिणोऽश्ववाराः ।
हठहेतिहतिस्फुटस्फुलिङ्गक्षतधूलीतमसो रणं वितेनुः ॥ ४१ ॥
कृतशर्पितहेषितं महाश्वो युधि पाश्चात्यपदद्वयेन धावन् ।
गगनाङ्गणनर्त्तिताग्रपादः प्रसभादाह्वयते च शात्रवाश्वम् ॥ ४२ ॥
परघातविनिःसृतैर्निजान्त्रैः खुरकोटीघटनात्प्रविच्युटद्भिः ।
ततमार्गलतागणैरिवाश्वः खलु नास्खल्यत कोऽपि धावमानः ॥ ४३ ॥
रणतूर्यनिनादमुक्तनिद्रः कृतहेषारवलक्ष्यमाणहर्षः ।
अकृत द्विगुणां गतिं वितन्वन् हरिरेकः पुलकोद्गमं नियन्तुः ॥ ४४ ॥
रणसीम्नि मिथोविलङ्घनोत्कौ कृतफालौ स्खलितौ पुरोऽन्तरिक्षे ।
हृतसादिकरग्रणुन्नमौली भुवि पश्चात्पतितौ हरी न कौचित् ॥ ४५ ॥
तुरगाग्रपदान्तदान्तदन्तान्विभिदे कश्चन दन्तिनोऽश्ववारः ।
असिदारितकुम्भमुक्तमुक्तावलिभिर्मूर्द्धनि जातपुष्पवृष्टिः ॥ ४६ ॥
रथिनां स्थिरमूर्द्धविग्रहाणां चतुरः कश्चिदनातुरं तुरङ्गी ।
असिनाशु शिरांस्युदास नूनं कलयन्कन्दुकविभ्रमं सुरीभिः ॥ ४७ ॥
द्विरदेषु रथेषु पत्तिषु प्रागपतत्कश्चिदुदारहर्षहेषः ।
समरोत्कतुरङ्गिचेतसेव प्रथितस्पर्द्धमहो मुहुर्महाश्वः ॥ ४८ ॥
परिमुक्तशिरोरुहैर्नदद्भिः क्षणकृत्साङ्गलवैः समुच्छलद्भिः ।
प्रधनाधिपदैवतावतारादिव वीरैर्वत बभ्रमेऽरुणाक्षैः ॥ ४९ ॥
गलितस्वपरप्रभेदबोधा युधि योधा वधबुद्धिबद्धकक्षाः ।
निजकोपरसार्णवे तु मूर्तं क्षतजौघे व्यहरन्त कण्ठदघ्ने ॥ ५० ॥
पतितेऽपि शिरस्युदारहक्काभृति कस्यापि भयोद्भवप्रकम्पे ।
अरिभिर्गलदायुधैः कथञ्चिन्नविनिघ्नन्युधि पातितः कबन्धः ॥ ५१ ॥
पतितां पदयोः प्रियां पदाग्रैः करलग्नं सुहृदं चपेटयैव ।
परिताड्य मृतस्य मूर्ध्नि बन्धोर्निहिताङ्घ्रिर्दिवमाप कश्चिदेकः ॥ ५२ ॥
पतितो युधि भूमिखातदन्तान्तरवर्त्ती करिणो हृदाप्य कुम्भौ ।
पुरुषायितवल्लभाकुचाग्रस्मरणात्कश्चिदधत्त रोमहर्षम् ॥ ५३ ॥

यद्धावदुदारपादपातं च्युतमूर्द्धापि भटो रुषारुणाक्षः ।
अपि लोहमयेन तन्निहन्तुः करवालेन किल व्यकम्पि मौलिः ॥ ५४ ॥
पतता शिरसैव शस्त्रितेन द्विषमाहत्य यशो वितन्य विश्वे ।
अपि नाकवधूमवाप्य रक्तां स्वकबन्धेन ननर्त्त कोऽपि धन्यः ॥ ५५ ॥
रणमूर्च्छिनि वल्लभे गतासुः सहसा कापि दिवङ्गना सतीत्वात् ।
पुनरुच्छ्वसिते शुशोच तस्मिन् विरहार्त्या मरणोत्सुकेव तुष्टा ॥ ५६ ॥
प्रियलाभमहोत्सवाय तेनुः सुरनार्यो विविधानि मण्डनानि ।
तदवाप्तिहृदां तु बाहुभाजां युधि भूषाऽजनि सत्त्वमेकमेव ॥ ५७ ॥
परिरम्भकृतां सुराङ्गनाभिः सह यः सत्त्वभृतां बभूव कम्पः ।
सुदृशां शिखिवर्त्मधावितानां पुरतो भीतिपदे स एव जातः ॥ ५८ ॥
सविधच्युतमौलिहक्कयोच्चैर्विगलत्कर्त्तरिकाभयातिरेकात् ।
विनिपत्य कबन्धकेषु धैर्यं कथमप्यादधते स्म यातुधानाः ॥ ५९ ॥
अधिपादतृणीकृतेन कामं वपुषोपक्रियतां मयाऽसुनाय ।
इति पक्षिषु भक्षिषु श्वसन्तः पतिताः श्वासमधुर्मृता इवैके ॥ ६० ॥
नवरक्तविलेपिनोऽन्त्रमालाकृतहाराश्च कुटुम्बिनः पिशाचाः ।
वशया पिचितं कपालपात्रैरघसन्प्रेतपतेर्महोत्सवेऽस्मिन् ॥ ६१ ॥
बहुमांसमकीकसं मृतानां मृदुलाहारकृतेऽङ्ककं यदापुः ।
तदपि ध्रुवमाहरन् शृगाल्यो व्यथितास्या घनमग्रभल्लशल्यम् ॥ ६२ ॥
अधिरुह्य मृताङ्गकानि रौद्राः करमोद्दायितनर्त्तिताऽसिदण्डाः ।
परतीरजुषां द्विषां निहन्तुं तरलं तेरुरसृग्धुनीषु धीराः ॥ ६३ ॥

धावद्दुर्द्धरधीरपादविधुरक्ष्मास्वेदबिन्दूपमाः
क्षत्रासिक्षतकुम्भिकुम्भपतिता मुक्तामणिश्रेणयः ।
दोलारूढसमग्रराजकजयश्रीलोलताविक्रय-
धम्मिल्लग्रथितप्रसूनपटलीपातश्रियं शिश्रियुः ॥ ६४ ॥

इति श्रीगूर्जरेश्वरमहामात्यश्रीवस्तुपालविरचिते नरनारायणानन्दनाम्नि
महाकाव्ये सङ्ग्रामवर्णनो नाम त्रयोदशः सर्गः ॥

श्रीवस्तुपाल जितबालमृणालगर्भे शुभ्रं वितन्वति जगत्त्रय कीर्तिपूरे ।
मन्यामहे कुवलकज्जलकोकिलालिकाकोलकोलमदशामभिधा मृषाऽभूत् ॥ १४ ॥

## चतुर्दशः सर्गः ।

समं समन्तात्समचालि शूरैरथो रथोत्सङ्गकृतप्रतिष्ठैः ।
नवीनवीर्यैः कलयद्भिरम्यमहो महो वैरियुगान्तहेतोः ॥ १ ॥
चापं तदा दानरुचा रसज्ञासदृक् सहासस्थितितानवेन ।
भल्लेन नद्धं शमनाननाभमग्रेसरं चारु न कः क आप ॥ २ ॥
( सशरशरासनबन्धः )

तत्तच्छरासननिरस्तनिरन्तराल-
नाराचजालचलनाद् गगनान्तराले ।
कृत्तैः किलार्ककिरणैर्धरणी नितान्तं
संशिश्रिये क्षतजनक्षतजच्छलेन ॥ ३ ॥ ( निरोष्ठ्यः )
अथाथग्रतिकार्याय पतन्निचतुरा हिताः ।
योधा एकैकघातार्त्तिपतन्निचतुराहिताः ॥ ४ ॥

उद्दण्डकाण्डकृतमण्डपडम्बरेषु रक्तौघकुङ्कुमरसाकुलभूतलेषु ।
कालेन कृत्तभरमस्तकमोदकानामालोकनेन ननृते समरोत्सवेषु ॥ ५ ॥
( अतालव्यः )

प्रभाविलासा परमा रणेषु प्रभाविलासा परमारणेषु ।
रसेन सेनायुगली न जेतुमशक्यतान्योन्यमनूनशक्तिः ॥ ६ ॥
अभूत्सम्भेदनिर्भेदं तरवारितरङ्गितम् ।
तद्वाहिनीद्वयं भीततरवारितरङ्गितम् ॥ ७ ॥

असमसमरलीलालाघवेनाशु तृणाविरहिणि शरभारैः शोभमानाभिमानः ।
अहितनिहितमेवादाय बाणं शरीरादधिन धनुषि चैकः साधुवादं च लेभे ॥८॥
( असंयोगाक्षरः )

देहे परशरोदारस्तनं कश्चिद्गुरुः ।
सेहे वीरवरो धीरश्रीनस्ताङ्कमृदु स्थिरः ॥९॥ ( गोमूत्रिकाबन्धः )

केनचिद्विरचितो रिपुर्मिथःसङ्गरोचितमहास्त्रपाततः ।
सङ्गरोचितमहास्त्रपाततः स्वर्वधूप्रथमकेलिकौतुकी ॥ १० ॥
उवाहासिमहानन्यो भुवा हावानिहानघः ।
घनहानिमहाशत्रुजनहासिमहाः शरान् ॥ ११ ॥ ( मुरजबन्धः )

चक्रे रसचापलतारयानकः प्रभाततः कोपि मनो रथी रणे ।
प्रभाततः कोऽपि मनोरथी रणे चक्रे रसचापलतारयानकः ॥ १२ ॥

लोलकीलालकल्लोलकूले कलकलाकुलः ।
लीलालोकी ललालैकः कालकेलिकलः कलः ॥ १३ ॥ (द्व्यक्षरः)
नन्नूतेऽरिवधाय केनचिद्धतेव करस्थितं यमम् ।
चतुरंगबलप्रभासिना च तुरंगबलप्रभासिना ॥ १४ ॥
कलङ्कपङ्कपं चक्रे चक्रे सरसरक्षणम् ।
क्षणं परः परबलं चलत्कलकलः कलम् ॥ १५ ॥
(अविश्रान्तसंदंशिकायमकम्)
शूरः स्थिरतरः स्फारशरभारः पुरः पुरः ।
आर वैरभरस्मेरवीरवारहरः परः ॥ १६ ॥
(षोडशदलकमलबन्धोऽन्त्यवर्णौ भेदद्वयविपक्षगोमूत्रिकायन्यश्च)
पूरम्पूरं पुरोऽपारं रोपपूरं परःपरम् ।
रूपं पुररिपोराप पारेरिपुपरम्परम् ॥ १७ ॥ (द्व्यक्षरः)
कीलाली कलिताकण्यदोसः कोऽपि द्विपघ्नने ।
कीलालीकलिताऽरण्यदावानलनिभो बभौ ॥ १८ ॥
यल्लाधीनं चमूमत्यपरमचरितः सद्रुचिः सङ्गरादौ
केतुं हार्य रसं दोःसुकृतविभवतः क्षालितश्रीर्व्यकासीत् ।
रक्तासृक्प्रोज्झहस्तं रसिसमरमहानन्यवीरस्तदान्यः
स्यन् शूरं वृन्दरावप्रसभततसदौचित्यवर्योसिरुद्धः ॥ १९ ॥
(कविनामश्लोकगर्भाङ्कषडारं चक्रम्)
वसन्तसचिवः सिद्धधीरालिरसविस्तरम् ।
चक्रे श्रीहारि कृष्णस्य महाकाव्यमदो मुदा ॥२०॥ (गर्भश्लोकोऽयम्)
वीरनन्दकसत्प्रासो बभारेह परो रुचा ।
चारुरोपहरे भावसोत्प्रासकदनं रवी ॥२१॥ (अनुलोमप्रतिलोमश्लोकोऽयम्)
प्रभावनिस्तारकलेवरोऽसौ प्रभावनिस्तारकले वरोऽसौ ।
पदातिरेकः कलहंससारः पदातिरेकः कलहंससारः ॥ २२ ॥
लोलालोलं लुलोलेली लाली लालल्लुलोल्लुलः ।
लोलंलोलं लुलल्लोलोल्लोलल्लीलालली ललः ॥ २३ ॥ (एकाक्षरः)
सप्रभावरणः कोऽपि महागौरवलक्षणः ।
सुरावलाली राजीषु वितताार विरोधिनाम् ॥ २४ ॥ (महायमकम्)
एवं प्रगुणप्रहरणगणशोभाभिर्विभाविभुजविभवाः ।

अमरप्रकरेण भृशं हर्षपुषा पुष्पभरवृष्ट्या ॥ २५ ॥
परमे घनवरवपुषः समरोपचये नरो महिताः ।
परमेघनवरवपुषः समरोपचयेन रोमहिताः ॥ २६ ॥ (युग्मम्)
(प्रथमश्लोकोऽद्न्त्यः द्वितीयः समुद्गकः असंयोगाक्षरश्च)

मायारातततरायामा याशमाक्षक्षमाशया ।
रामामाददमामारा तक्षदक्षक्षदक्षत ॥ २७ ॥ (सर्वतोभद्रम्)

सेनामेनां सपत्नस्य भिनत्सि न कथं जवात् ।
वचनानीति सूतस्य निशम्य स्मयवानथ ॥ २८ ॥ (अमूर्द्धन्यः)

शर्वरीश्वरयशाः स्वयं श्रियः संश्रयो वशशरः ससार सः ।
वैरिवीरवलयव्ययाशया वासविः सरसरावलालसः ॥२९॥ (अपञ्चवर्गः)
(षडक्षरश्लोकोऽयं विशेषकम्)

दहन्महावैरिवनानि लोहनाराचवीर्षि दिवि धूमधूम्राम् ।
तदा बभार स्मितदावभा रविभासमानः स विभाऽसमानः ॥ ३० ॥

यश्चक्रेऽस्य क्षमाकान्तधरस्य पुरतो रणम् ।
स ददर्श जवाद्दण्डधरस्य पुरतोरणम् ॥ ३१ ॥

नूनं नानेन नुन्नो ना कः कोऽङ्के केकिकाकुकः ।
तातताततितत्तान्तो रैरारोरूरोररः ॥ ३२ ॥
(प्रतिपादविभक्तचतुर्व्यञ्जनः)

व्यालावलीविलयवर्यरवालयोऽयं लोलैरिलावलयवीरवरैरवार्यः ।
वैराविलो रयलयैरविवारवारी वीर्यं युवा रविरिवाविरलं विवव्रे ॥३३॥
(अन्तःस्थाक्षरोऽयम्)

यत्रे तेन ततश्रीकविभाविविदितशुता ।
नापदालोककरविकलासंसङ्गिना रवः ॥ ३४ ॥
(कविनामाङ्कशक्तिबन्धः वसन्तकविकविनानामाक्षराणि)

रिपुनिकरो बलराजीराजी राजीवशोणनयनेन ।
चक्रे युधे वै कुन्ती कुन्ती कुन्तीसुतेन रथा ॥ ३५ ॥ (न्यावर्त्ययमकम्)

अग्र्यः प्रत्यग्रवल्गत्तरलतरशरं नन्वयं धन्वदण्डं
चण्डं कर्पन्नमर्षप्रसररसलसद्गर्वसर्वस्ववश्यः ।
वर्षन्दर्पप्रकर्षं गगनतलगतस्वर्गसङ्घर्गमन्तः
प्रत्यक्षत्पक्षकल्पः प्रबलपरबलध्वंसनं स व्यधत्त ॥ ३६ ॥ (आद्यस्वरः)

समरे कोपपरममहारित्रासस्रवणः ।
चरमायो जनोच्छ्रायो जेयो मारचणः क सः ॥३७॥ ( खड्गबन्धः )

स्वाजन्यजन्यशंमनोऽथ विरम्य रम्यकोदण्डदण्डकृतिना समहारि हारि।
वैधुर्यधुर्यरवकारिभुजालजालमासारसारविशिखस्फुरितेन तेन ॥ ३८ ॥

रोपारोपाढ्यनुर्ज्यावलयवलयशोभासमानः समानः
सत्रासत्राणधीरो रविकरविकटोद्दीप्रतापप्रतापः ।
कामेकामेप नोचैरसमरसमयो नाम रीणामरीणा-
मालीमालीढसत्त्वां रणकरणकटुः क्षाणचक्रेण चक्रे ॥ ३९ ॥
( प्रतिपादद्व्यावर्त्तआदिमध्यावसानयमकम् )

युध्यध्वं मा स्म धीरा हरिहयतनयं मामिव ध्यायतासुं
धीरध्वानैर्निषिध्य स्वबलमिति बहुदस्तहस्तो विहस्तम् ।
दैत्यध्वंसी तदैत्य प्रियसुहृदमसुप्रायमाश्लिष्य हृष्य-
त्प्रेमस्तोमं तमन्तःशमनयमनयद्धैर्यधुर्यं स्वपुर्याम् ॥ ४०॥ ( अत्रिवर्गः )

इति श्रीगूर्जरेश्वरमहामात्यश्रीवसन्तपालविरचिते नरनारायणानन्दनाम्नि
महाकाव्ये अर्जुनावर्जनो नाम चतुर्दशः सर्गः ॥

लक्ष्म्यामाकृष्टिमुच्चाटनमनयवति स्तम्भमुज्जृम्भिमस्तम्भे
द्वेपे विद्वेषमभ्यन्तरारिपुषु मृतिं यच्छतां चित्रहस्तौ ।
कर्तुं यद्वस्तुपाल प्रभवसि सकले मण्डले तच्चैव
श्रीमन्मन्त्रीश मन्त्रे स्फुरति निरवधिः कापि षट्कर्मसिद्धिः ॥ १५ ॥

---

## पञ्चदशः सर्गः

अथ शिथिलितसर्वस्वार्थसार्थं सुभद्रापरिणयपरिणाहारम्भसंरम्भसम्पत् ।
अहह महमहीयस्तत्पुरं सत्पुरन्ध्रीललितकलितलीलं शर्मनिर्मग्नमासीत् ॥ १ ॥
प्रकटितपटुरागा कुङ्कुमाम्भश्छटाभिर्विपुलपुलकपङ्क्तिस्तोरणस्तम्भदम्भात् ।
अतिमहति महेऽस्मिन्नित्यनृत्या व्यराजत् मुररिपुपुरलक्ष्मीरध्वजाग्रद्-
ध्वजाग्रैः ॥ २ ॥
हरिनगरनराणां धोरणिस्तोरणस्रग्दलचलनमिषेण भ्रूपरिक्षेपदक्षा ।
महसहजविभूतिर्वासवावासनर्जा चिरमकुरुत चञ्चत्केतुचेलाङ्गुलीभिः ॥ ३ ॥

स्थिरजनितनूनां नूनमक्षीणि यूनामपि चपलविलासाभोगमभ्यासयन्त्यः ।
त्वरितमित इतोऽपि भ्रेमुरौत्सुक्यभाजो रतिदयितजयश्रीजीवितव्यं युवत्यः ४
भवनभुवि सुभद्रा मन्दमभ्यर्णपाणिग्रहमहमदमत्ता यानि तेने पदानि ।
तदभिनयनविद्याहेतवेऽद्यापि हंसो लसदलसगतिर्याद्वयतां सेवतां सः ॥ ५ ॥
अथ नवरविरश्मिस्मेरकाश्मीरनीरैः परिणयनदिनादौ लब्धरागासु दिक्षु ।
व्यधुरुदयदनङ्गं मङ्गलस्नानमस्याः पतिसुतपितृमातृभ्रातृवत्यो युवत्यः ॥ ६ ॥
सितरुचि शुचि वासो बिभ्रती सम्भृताङ्गं विशदवदनकान्तिः सा वराङ्गी विरेजे ।
कनककमलिनीव स्वच्छगङ्गातरङ्गावलिवलयितमूर्तिः स्पष्टदृष्टाम्बुजश्रीः ॥७॥
स्वयमजनि जनन्या चान्दनं चित्रकं यन्मुखमभवदमुष्यास्तेन लीलाचलत्वं ।
शरपरिचयचञ्चच्चापचापल्यशाली विधुरिव धुरि वीरः कामवीरध्वजिन्याः ॥८॥
जितवलयविलासं पाणिदेशे यदस्याः परिणयमयमूर्णासूत्रमासूत्रि मात्रा ।
सपदि मदनदेवस्तत्त्रिलोकी त्रिलोकीविजयिनि निजचापे ज्यापरिस्पन्दमैच्छत् ९
अहह सहजहृद्यदूषणाभूषणालीरुचिररुचिरपश्यद्दर्पणं दर्पतोऽसौ ।
अपि निरुपममस्याः शोभमानोपमानं वपुरजनि तदन्तर्लम्बिना बिम्बितेन ॥१०॥
असमकुसुमपूजालीनसद्यःसमुद्यन्मधुकरकुलरावैराशिषं पुण्यराशिम् ।
यदिह पदनतायां गोत्रदेव्योऽप्यवोचन् किमु किमु न तदूचुः श्रद्धया
गोत्रवृद्धाः ॥ ११ ॥
परिणयरयचिन्ताधूतचिन्तामधैतामुपचितरुचिमग्रे मातृवर्गं निवेश्य ।
उदयमपति लग्ने प्रीतिमग्नान्तरात्मा समजनि यदुसार्थः पार्थमार्गप्रतीक्षः १२
हिममहिममनोज्ञं चीवरं पीवरश्रीपुषि वपुषि वसानः स्नानसंशोभमाने ।
मनसिजविजयेन स्फारितस्फूर्त्तिमन्तर्यश इव विशदाभ्भो बिभ्रदभ्राजतैन्द्रिः १३
परिणयपरिणाहिश्रीसमुत्साहि सद्यो मलयजमयचञ्चच्चित्रकश्रीपवित्रम् ।
रजनिकरनिकारक्रीडितेनेव तेने मुखमकलुषकीर्त्तिस्तम्भसंरम्भमस्य ॥ १४ ॥
कलितसकलभूपागौरवं कौरवोऽसौ स्फुटिकमुकुरबिम्बे लम्बमानं निरूप्य ।
वपुरनुपमरूपश्रीसमुद्रं सुभद्रानयननलिनपात्रीकर्त्तुमत्युत्सुकोऽभूत् ॥ १५ ॥
तुरगसुरगराजच्छायमारुह्य चारुर्मलयरुहविलेपैश्चन्द्रजैत्रातपत्रः ।
अविकलसकलाङ्गस्फूर्त्तिमन्मूर्त्तवैवाहिकसुकृत इवासौ शक्रसूनुश्चचाल ॥१६॥
अथ मुदितमृगाक्षीमण्डलोलूलुनादद्विजततियदुभक्तिप्रासहस्तावलम्बः ।
विधुरितविधुसूर्यैः कृत्स्नमापूर्य तूर्यध्वनिरनिमिषमार्गं क्रीडितः क्रोडिताशः १७
द्रुततमगति जग्मुः स्फूर्जदूर्जस्वितूर्यस्वनजनितविनोदाः केलिजालान्तरेषु ।

धरवदनविलोकश्रद्धयाऽर्द्धप्रकृष्टोर्जितनिजनिजकार्यप्रक्रमाः पौरनार्यः ॥ १८ ॥
सरभसमभिरूढं काचिदारोप्य काञ्चीमुपचितघनघूर्णद्धण्टिकाघोषरम्याम् ।
तरलगति चलन्ती तुङ्गमानस्तुभङ्गादधित कुपितधावन्मूर्त्तकामेभशोभाम् ॥१९॥
रसधिवशमचालीद्बिभ्रती केशपाशं लसितमुरसि हस्तन्यस्तमस्पृतमन्या ।
अपयश इव मूर्त्तं चित्तभूभूमिभर्त्तुः सुरपतिसुतकान्तिस्फूर्जितैर्निर्जितस्य॥२०॥
द्रुततरमपरस्या जालगर्भे गताया ललितलुलितवेणिः पीवरश्रोणिरोजे ।
गतमवसुतकायच्छायचौर्यापवादादघटत घटसर्पो मन्मथस्येव दिव्यम् ॥२१॥
फलितललितमूर्त्तिर्मूर्त्तशृङ्गारसारद्रवघटित इवासावुत्पलश्यामलश्रीः ।
सुरपरिवृढसूनुर्दृश्यमानो न कस्याः कृतमदनविकारो हृद्विकारं चकार ॥ २२ ॥
वसनमपि वहन्ती स्वेदसन्दर्भलग्नं विपुलपुलकदण्डस्यूतमेवास्तवन्धम् ।
हठविरचितशून्यालिङ्गना तद्विलोकादतनुत वपुरेका कानराक्षी स्वमग्याम २३
निशितविशिखपातैर्मन्मथोऽन्तस्तथैकां हृदि सपदि तदानीं तद्विलोके जघान ।
न्यविशत भुवि भिन्ना कम्पिनी दीनचक्षुर्युगलविगलदस्रुः सा यथा सुस्रुवाङ्गी२४
सरसमुरसि पिण्डीकृत्य हारं तदङ्गमतिकृतिमतिमारं पीडयन्ती कराभ्याम् ।
अरमत मनसैका गुप्तसीत्कारपीनश्वसितललितलीलामीलिताक्षी गवाक्षे ॥२५॥
हृदि किमपि विभाव्य बिभ्रती कापि लीलाकरकमलमधुम्यस्तान्तुनं वीक्ष्य सद्यः ।
तदिह सुमदुग्गजकृद्दष्टाधरायं स्मरसपदेषा वेत्ति चित्तं मनोभूः ॥ २६ ॥
इति मुदितमृगाक्षीलोचनार्चिःप्रयत्नोपरिचयपरिरम्भोज्झान्तलावण्यवार्द्धिः ।
हरिधवलगृहाग्रं प्राप पार्थः पुरस्त्रीवदनगगनचकोरापीयमानाननेन्दुः ॥ २७ ॥
अपि गलयति तस्मिन्नक्षिमार्गान्मुहूर्त्तं मदनलपदमस्त्रुः कैरवाक्ष्यो गवाक्षे ।
तदिह नयनपातैरान्तरैरस्त्रलन्निस्तममममभिमोक्षायमिते गाग्रगुम ॥२८॥
विजयिनि पुलुयेन हृष्टमभ्यागतानामथ गलवति त्वरया कामिनीनां मनांसि ।
इति द्वारिणि मनोभूरेव निःशेषमासां वपुरपालमद्य मन्मथाक्रम्य मर्थो॥२९॥
निभृतमथ पृथाभूर्मङ्गलप्रस्तपुष्पप्रकरमधुरतालिध्यानदिष्टाप्रयत्नां ।
निशितगभितरत्नश्रोनस्तुमायकाशं मधुमथननिवेशोन्मङ्गमङ्गीचकार ॥ ३० ॥
अथ सुरमथनार्थैः सम्मुखीनाम्मुखैर्भिः सपदि गमुपदर्मदेशमानो मनस्वी ।
महसुभगसुभद्रालोकलोलान्तःकलितोऽप्यभिमुखपदगत्या मोपमघ्यं जगाम॥३१॥
स्मितसुभगमल्लागाः कण्ठयद्धं शरीरं मकलमपि मृणालीकण्ठमन्तं यतन्त्याः ।
तदनु गृहलपानो मानमोक्ष नन्दिन्या इव मविषमयारन्तरन्तमशयाः स मन्मा॥३२
३२ गुरुरपयानार्थैः पर्तिमारंभ द्विजपवनविधिर्भिः माधिने सम्प्रगल्भा ।

गुरुरथ वरवध्वोर्मङ्गलातोद्यनादे विलसति समकालं मीलयामास पाणी ॥३३॥
विधुविजयिनि यूनोर्नूनमन्यूनहर्षादरसयदमृतोर्मीरास्यपीयूषकुण्डे ।
चिरमुपचिततपोत्कर्पमन्योन्यमक्षिद्वयमभिमुखतारामेललीलामिषेण ॥ ३४ ॥
हरहुतवहदग्धं जीवयत्येव कामं परिणयनमखाग्नौ दीपिते दम्पती तौ ।
विविधविधिविधायी वर्त्तयामास धीमान् गुरुरथ पृथुविद्यामण्डलो मण्डलानि३५
शिथिलकरसरोजा लज्जमाना विकीर्य ज्वलितहुतवहान्तर्लाजमुष्टिं सुभद्रा ।
अकुरुत गुरुवाचा किञ्चिदाचारधूमग्रहणमथ मुखाब्जोत्सङ्गभृङ्गायमानम् ॥३६॥
हरिकरिरथरत्नालङ्कृतिस्वर्णमुख्यं निखिलविषयलक्ष्मीसारभूतं प्रभूतम् ।
किमु किमु कमलायाः कामुको नो तदानीमदित मुदितचेता यौतके कौतुकेन३७

पवित्रं यन्मैत्र्यं सहजमपि तत् कृत्रिमतया
दृढीकृत्य प्रीताविति जगति नारायणनरौ ।
तदालोके शोकव्यसनवशगानामसहन-
क्षितीशानां साक्षादुरसि विरसं शल्यमविशत् ॥ ३८ ॥

इति श्रीगूर्जरेश्वरमहामात्यश्रीवसन्तपालविरचिते नरनारायणानन्दनाम्नि
महाकाव्ये विवाहवर्णनो नाम पञ्चदश सर्गः ॥

भवति हि विभवो भवः परेषां तव विभवोऽभिनवस्तु वस्तुपाल ।
इह महिममहोयशः प्रसूते यदयममुत्र परत्र पुण्यलक्ष्मीम् ॥ १५ ॥

---

## षोडशः सर्गः

शोभाभिभूतपुरुहूतपुरं पुरन्ध्रीलावण्यलोभितजगन्नगरं गरीयः ।
धाम श्रियोऽणहिलपाटकनाम कामलीलामयं जयति गूर्जरभूविभूषा ॥ १ ॥
वाग्देवतां यदि जना जननीमिवैनामानन्दिनः प्रतिदिनं हृदि नन्दयन्ति ।
यस्मिन्निमान्मदनतुल्यवपुस्तथापि निर्मत्सरा त्यजति नो सुतवत्सला श्रीः ॥२॥
प्राग्वाटगोत्रतिलकः किल कश्चिदत्र श्रीचण्डपः स्फुटमचण्डपदप्रतिष्ठः ।
विस्फूर्जितान्यधिन गूर्जरराजराज्यराजीवजीवनरविः सचिवावतंसः ॥ ३ ॥
तृष्णीकृतारिवदना सुमनोमनांसि रागास्पदं विदधती यदलक्ष्यरूपा ।
आनन्दमर्दितविचारमदैर्यदीयकीर्त्तिर्सुधा जितसुधा युयुधे बुधेन्द्रैः ॥ ४ ॥
चण्डप्रसाद इति सादितविश्वदौःस्थ्यस्तन्नन्दनः स्वकुलनन्दनकल्पशाखी ।
मुक्तामयममलमसमप्रचारप्रभ्रश्यत्कीर्तिप्रभासुरभिताम्बरभूर्बभूव ॥ ५ ॥

शास्त्रार्थवारिभरहारिहृदालवालसंरोपिता मतिलता वितता नितान्तम् ।
यस्य प्रकाशितरविग्रहतापवद्भिश्छायार्थिभिर्नृपकुलैः फलदा सिषेवे ॥ ६ ॥
पुण्यस्य पापपटलीजयिनो जयश्रीरासीत्तदीयदयिता नयभूर्जयश्रीः ।
यस्या मनोदयितभक्तिसुरस्रवन्ती स्नानोज्ज्वलां जनयति स्म जिनेन्द्रसेवाम् ७
नैवोष्ठसम्पुटविपाटनया कदाचिदेषा स्मितं जितसुधाविभवं व्यधत्त ।
श्वेतद्युतिः कलुषतां तदयं हृदन्तः केनापरेण परिभूततनुस्तनोति ॥ ८ ॥
श्रीरङ्गभूर्भूशमभूदनयोर्नयाढ्यश्रीरङ्गभूर्जगति शूर इति प्रतीतः ।
अस्वप्नतां सुरगुरुः सह शिष्यवर्गैर्धत्ते स्म यन्मतिजितश्चिरचिन्तयेव ॥ ९ ॥
चूडामणीकृतजिनाङ्घ्रिनखप्रपञ्चः कर्णस्फुरद्गुरुसुवर्णविभूषणश्रीः ।
सद्वर्त्मनि प्रचलदुर्मदमोहचौरः दुःसञ्चरेऽपि विललास य एव शूरः ॥ १० ॥
हृत्वापि कान्तिलवमेव यदीयकीर्तेर्दिव्यं स्रजन्निव जगत्यपवादभीतः ।
इन्दुः सुधावपुरपि प्रभुरौषधीनामप्येष सर्पनिभलक्ष्मधृतौ न शुद्धः ॥ ११ ॥
सोमाभिधस्तदनुजः सुजनाननाब्जसूर्योऽभवद्विबुधसिन्धुविशुद्धबुद्धिः ।
यन्मानसेऽद्भुतरसे विललास वार्द्धिक्षिप्तौर्वतापविधुरेव सरस्वतीयम् ॥ १२ ॥
क्रीडाकथासु सदसि द्युसदां सदैव मौलिं विकम्प्य किल सोऽपि गुरुः सुराणाम् ।
यद्बुद्धिवैभवभरस्य विचारितस्य नीराजनान्यकृत चञ्चलचूलरत्नैः ॥ १३ ॥
देवः परं जिनवरो हरिभद्रसूरिः सत्यं गुरुः परिवृढः खलु सिद्धराजः ।
धीमाननेन नियतं नियमत्रयेण कीर्त्तिं व्यधात्त्रिपथगामिव यः पवित्राम् ॥१४॥
पुस्फूर्ज गूर्जरधराधवसिद्धराजराजत्सभाजनसभाजनभाजनस्य ।
दुर्मन्त्रिमन्त्रितदवानलविह्वलायां श्रीखण्डमण्डननिभा भुवि यस्य कीर्त्तिः ॥१५॥
कुर्वन्पराघ्यगणिते सति यद्गुणानामेकैकबिन्दुरचनासुकुतैनवेन ।
चन्द्रच्छलेन कति नो खटिनीर्युभित्तौ धाता व्यधादथ विधास्यति कीर्त्तिशेषाः १६
नो श्रेयशांसि बलिकर्णदधीचिमुख्या दानोत्सवैरविरलानि भुवि व्यधास्यन् ।
भक्तैरदास्यत विलासमरालबाललक्ष्मीर्यदीयघनदानयशोनदीषु ॥ १७ ॥
श्रीवासससप्रकरपद्मगदीपकल्पां व्यापारिणः कति न बिभ्रति हेमसुद्राम् ।
प्रज्वालयन्ति जगदप्यनयैव केऽपि येन व्यमोचि तु समस्तमिदं तमस्तः ॥१८॥
कान्ता जगत्त्रितयविस्मयनीयनीतेः सीतेति रामचरितस्य बभूव तस्य ।
यल्लोचनं स्थिरतरं दयिताननेन्दौ दूरेण काञ्चनमृगश्रियमन्वगच्छत् ॥ १९ ॥
हर्षादसौ हसतु शीतकरोऽपि भासा भृङ्गीछलैरपि च कुड्मलतां सरोजम् ।
दूरावलम्बितशिरोऽम्बरडम्बरेण यस्या मुखं जगति न प्रकटं यदासीत् ॥ २० ॥

तत्सम्भवस्त्रिभुवनाभरणं बभार शुभ्रं यशोभरमनश्वरमश्वराजः ।
मुक्त्वा कलङ्ककलितं ललितं हिमांशुं हर्षोदलाभि सकलाभिरयं कलाभिः॥२१॥
यं मातृभक्तिशुचिमेव यशश्छलेन संसेव्य जातसुकृतो रजनीभुजङ्गः ।
आसीज्जगत्त्रितयविस्तृतवैभवश्च साक्षात्कलङ्करहितश्च सदोदितश्च ॥ २२ ॥
हुत्वा सदध्वरचितेषु तमांसि तीर्थयात्रोत्सवेषु खलु सप्तसु पावकेषु ।
यः सप्तपूर्वपुरुषैकमुदे यशोऽम्भःपूर्त्तानि सप्त भुवनानि कृती प्रतेने ॥ २३ ॥
संस्तूयमानचरितः परितः प्रबुद्धैः सत्यव्रते सुकृतसूनुरिवान्वहं यः ।
लज्जामसज्जयत चापगुरुद्विजेन्द्रद्रोणक्षयक्षणतदुक्तिविचारणेन ॥ २४ ॥
तस्य प्रिया प्रणयपात्रममात्रशीललीलायितं बत बभार कुमारदेवी ।
आलीयत प्रतिपदं जिनपादपद्मे चित्तेशवक्त्रकमले च यदीयदृष्टिः ॥ २५ ॥
यस्या मुखे जिनगुणग्रहणप्ररोहत्प्रीत्या शिरः प्रतिकलं परिकम्पयन्त्याः ।
हित्वाऽम्बुजं च रजनीरमणं च लोला दोलाकुतूहलरसं समसेवत श्रीः ॥२६॥
सूनुस्तयोरजनि नीरजनिर्मलास्यः श्रीलास्यभूः स्मरकलः किल लूणिगाख्यः ।
बाल्येऽपि यस्य चरितं विरराज वृद्धसंवादकं श्रमनिराकृतपल्लवस्य ॥ २७ ॥
यस्याननं द्विजवियुक्तमपि द्विजेन्द्रसान्द्रप्रभाभरमभात्सवशैशवस्य ।
अङ्गं च केशलवमुक्तमपि व्यराजद्यस्य प्रवालरुचिराधरपाणिपादम् ॥ २८ ॥
सत्याभिधस्तदनुजो मनुजावतंसरत्नं बभूव विदितो भुवि मल्लदेवः ।
यस्याग्रतः प्रतिकलं गतिविभ्रमेण विभ्राजते स्म न महानपि हस्तिमल्लः ॥२९॥
और्वाग्निनापतत यः सततं पयोधौ पातालसीम्नि फणिफूत्कृतिदावदाहः ।
चण्डेव चण्डकरघर्मघटेति मत्वा यस्योज्ज्वलानि वचनानि सुधा सिषेवे॥३०॥
तस्यानुजः पितृपदाम्बुजचञ्चरीकः श्रीमातृभक्तिसरसीरसकेलिहंसः ।
साक्षाज्जिनाधिपतिधर्मनृपाङ्गरक्षो जागर्त्ति नर्तितमना मुदि वस्तुपालः ॥ ३१ ॥
नागेन्द्रगच्छमुकुटामरचन्द्रसूरिपादाब्जभृङ्गहरिभद्रमुनीन्द्रशिष्यात् ।
व्याख्यावचो विजयसेनगुरोः सुधाभमास्वाद्य धर्मपथि सत्पथिकोऽभवद्यः ३२॥
कुर्वन्मुहुर्विमलरैवतकादितीर्थयात्रां स्वकीयपितृपुण्यकृते मुदा यः ।
सद्गुद्दिसङ्घपदरेणुभरेण चित्रं सद्दर्शनं जगति निर्मलयाम्बभूव ॥ ३३ ॥
धर्मोचितीं रुचितकामगवीं निषेव्य दुग्धप्रपास्त्रिजगतोऽपि वितत्य कीर्त्तीः ।
यो मातृदुग्धरसपानमहोत्सवानामानृण्यमात्मनि कथञ्चन नैव मेने ॥ ३४ ॥
भास्वत्प्रभावमधुराय निरन्तरायधर्मोत्सवव्यतिकराय निरन्तराय ।
यो गूर्जरावनिशिरोमणिभीमभूपमन्त्रीन्द्रतापरवशत्वमपि प्रपेदे ॥ ३५ ॥

यः कामवृत्तिरनुजेन निजेन तेजःपालेन पूर्णनृपकार्यपरम्परेण ।
सद्धर्मकर्मरस एव मनो मनोज्ञविद्यद्विनोदपयसि स्नपयाम्बभूव ॥ ३६ ॥
यः स्वीयमातृपितृबन्धुकलत्रपुत्रमित्रादिपुण्यजनये जनयाञ्चकार ।
सद्दर्शनव्रजविकासकृते च धर्मस्थानावलीवलयिनीमवनीमशेषाम् ॥ ३७ ॥
कीर्त्या सौरभसारसान्द्रसुमनःसन्दोहसन्दोहकृत्-
कान्त्या पाति वसन्तमन्वहमसावित्यर्पितार्थक्रमम् ।
ख्यातं प्राप वसन्तपाल इति यो नामाद्वितीयं मुदा
विद्वद्भिः परिकल्पितं हरिहरश्रीसोमशर्मादिभिः ॥ ३८ ॥
श्रीशत्रुञ्जयशैलशेखरमणेः श्रीनाभिसूनुप्रभोः
पीत्वा वक्त्रसुधांशुदीधितिसुधामाकण्ठमुत्कण्ठया ।
व्यातन्वन्कवितां नितान्तमुदितः सद्यस्तदुद्गारवत्
तस्यैवादिजिनेश्वरस्य जनयामास [1]स्तवं यो नवम् ॥ ३९ ॥
नरनारायणानन्दो नाम कन्दो मुदामिदम् ।
तेने तेन महाकाव्यं वाग्देवीधर्मसूनुना ॥ ४० ॥
उद्भास्वद्विश्वविद्यालयमयमनसः कोविदेन्द्रा वितन्द्रा
मन्त्री बद्धाञ्जलिर्वो विनयनतशिरा याचते वस्तुपालः ।
अल्पप्रज्ञाप्रबोधादपि सपदि मया कल्पितेऽस्मिन्प्रबन्धे
भूयो भूयोऽपि यूयं जनयत नयनक्षेपतो दोषमोषम् ॥ ४१ ॥

इति श्रीगूर्जरेश्वरमहामात्यश्रीवसन्तपालविरचिते नरनारायणानन्दनाम्नि महाकाव्ये प्रशस्तिप्रपञ्चो नाम षोडशः सर्गः ॥

---

अचिन्त्यदातारमजातशत्रुं श्रीवस्तुपालं कति नाश्रयन्ति ।
चिन्तामणिः सोऽपि युधिष्ठिरश्च नाम्नैव सामर्थ्यपदं यदग्रे ॥ १७ ॥
शङ्के शारदपर्वगर्वितशशिज्योत्स्नासपत्नं तव
त्रैलोक्ये गुणजालकं विलसति श्रीवस्तुपालाद्भुतम् ।
यच्चाद्यप्रपाशवैशसकृताशङ्काभिशङ्का स्फुटं
नैवान्यस्य भवन्ति कीर्तिवरलाः खेलासु हेलास्पदम् ॥ १८ ॥

समाप्तं नरनारायणानन्दमहाकाव्यम् ।

---

1 This will be found on p 63.

## APPENDIX I.

श्रीगूर्जरेश्वरमहामात्यवस्तुपालकृतं

# श्रीआदीश्वरमनोरथमयं स्तोत्रम्

लब्ध्वा मानुषजन्मजातिसुकुलप्रष्ठां प्रतिष्ठामिमां
धृत्वा धर्मधुरीणतामधिगतः सङ्घाधिपत्यश्रियम् ।
तीर्थेशाग्रिम वस्तुपालसचिवो विश्वाग्रजाग्रत्पदा-
रोहाय प्रगुणां मनोरथमयीं निःश्रेणिमाशिश्रियत् ॥ १ ॥
श्रीनाभेय मनोरथाः शतपथा मिथ्याभिमानाम्बुधेः
कल्लोला इव विस्फुरन्ति विषयग्राहग्रहव्यग्रिताः ।
हित्वा तानिति वस्तुपालसचिवः सद्बोधदुग्धोदधे-
र्भेजे वीचिसमानिमान् शमदमस्वच्छमुक्ताफलान् ॥ २ ॥
प्रत्याशं प्रसरत्कषायविषयज्वालाकरालादितो
दूरीभूय भयङ्कराद्भवदवाद्व्यामोहधूमान्धितः ।
श्रीशत्रुञ्जयशैलपावनजिन त्वद्वक्त्रचन्द्रातपो-
पास्तिध्वस्ततमाः शमामृतहृदे दाहं कदाहं क्षिपे ॥ ३ ॥
एतस्मिन्भववारिधौ निरवधि क्रोधौर्ववह्नेश्च्युत-
स्त्रस्तो लोभतिमिङ्गिलस्य गिलनात्क्लेशाम्भसो निर्गतः ।
स्त्रस्तस्तात कदा कदाग्रहमहाग्राहाच्च शत्रुञ्जय-
द्वीपं प्राप्य भजेय जेयविजयभीतः परां निर्वृतिम् ॥ ४ ॥
संसारव्यवहारतो रतिमतिव्यावर्त्यकर्त्तव्यता-
वार्त्तामप्यपहाय चिन्मयतया त्रैलोक्यमालोकयन् ।
श्रीशत्रुञ्जयशैलगह्वरगुहामध्ये निबद्धस्थितिः
श्रीनाभेय कदा लभेय गलितज्ञेयाभिमानं मनः ॥ ५ ॥
स्वामिन्मृत्युहरेरहं हरिणवन्नष्टोऽतिकष्टायुध-
व्याधिव्याधशतैर्वृतः श्रितभवारण्योऽशरण्यो भ्रमन् ।

नाभेय त्वमनाकुलः कुलपतिर्यत्रासि तस्मिँश्शुभे
श्रीशत्रुञ्जयशैलनामनि कदा पुण्याश्रमे विश्रमम् ॥ ६ ॥
श्रीगर्वोष्मभिरौष्मलेपु धनिनामीर्ष्यानलज्वालया
जिह्वालेपु मृगीदृशामनुशयाङ्गूमायितेपु द्विपाम् ।
घर्मेपु ग्लपितामिमां त्रिजगतीनिस्तन्द्रचन्द्रोदये
देव श्रीविमलाद्रिकेतन कदा दास्ये त्वदास्ये दृशाम् ॥ ७ ॥
क्रोधेन ज्वलितो हतोऽहमिपुभिः पञ्चेपुणा पञ्चभिः
बद्धो मोहमहाद्विपा च विपयग्रामं प्रकामं श्रितः ।
तद्धस्तान्तरवैरिवीर भुवनस्वामिन् सनाथे त्वया
दुर्गे श्रीविमलाद्रिनामनि सुखं स्यातास्मि सुस्थः कदा ॥ ८ ॥
आस्यं कस्य न वीक्षितं क्व न कृता सेवा न के वा स्तुता-
स्तृष्णापूरपराहतेन विहिता केपां च नाभ्यर्थना ।
तत्रान्तर्विमलाद्रिनन्दनवनाकल्पैककल्पद्रुमं
त्वामासाद्य कदा कदर्थनमिदं भूयोऽपि नाहं सहे ॥ ९ ॥
संसारे सुखहेतुवस्तुविपयैस्तैस्तैः सङ्गतैः सङ्गतै-
र्दत्ता देव त्वदन्यदेव तदियं वाञ्छा ममोत्सेकिनी ।
श्रेयोवैभव नाभिसम्भव भवाकूपारपारद्रुम
श्रीशत्रुञ्जयमण्डनेन भवता भावी कदा सङ्गमः ॥ १० ॥
एताः शमामृतरसेन हृदालवाले संवर्द्धिताः पृथुमनोरथवल्लयो मे ।
विश्वैकमित्र भगवन् भवतः प्रसादाल्लोकोत्तरैः फलभरैः सफलीभवन्तु ॥ ११ ॥
धर्मध्यानमना मनोरथमयं स्तोत्रं युगादिप्रभो-
श्चक्रे गूर्जरचक्रवर्त्तिसचिवः श्रीवस्तुपालः कविः ।
प्रातः प्रातरधीयमानमनघां यच्चित्तवृत्तिं सता-
मावत्ते विभुतां च ताण्डवयति श्रेयःश्रियं पुष्यति ॥ १२ ॥

इति श्रीआदीश्वरमनोरथमयं स्तोत्रम् ।

---

## APPENDIX II

# श्रीवस्तुपालसूक्तयः

[1]सुधा मधु सुधा सीधु सुधा सोऽपि सुधारसः ।
आस्वादितं मनोहारि यदि हारिहरं वचः ॥

[2]आयान्ति यान्ति च परे ऋतवः क्रमेण सञ्जातमत्र ऋतुयुग्ममगत्वरं तु ।
वीरेण वीरधवलेन विना नितान्तं वर्षा विलोचनयुगे हृदये निदाघः ॥

[3]यशोवीर यशोमुक्ताराशेरिन्दुरसौ शिखा ।
तद्रक्षणाय रक्षायाः श्रीकारो लाञ्छनच्छलात् ॥

बिन्दवः श्रीयशोवीर मध्ये शून्या निरर्थकाः
सङ्ख्यावन्तो निगद्यन्ते त्वयैकेन पुरस्कृताः ॥

यशोवीर लिखत्याख्यां यावचन्द्रं विधिस्तव ।
न भाति भुवने तावदाद्यमप्यक्षरद्वयम् ॥

सन्तः समन्तादपि तावकीनं यशो यशोवीर वत स्तुवन्ति ।
जाने जगत्सद्मन लज्जमानः प्रविश्य कोणे त्वमतः स्थितोऽसि ॥

प्रकाश्यते सतां साक्षाद् यशोवीरेण मन्त्रिणा ।
मुखेन्दुज्योतिषा ब्राह्मी करे श्रीः स्वर्णमुद्रया ॥

[4]अस्थिरेण वपुषा स्थिरमाद्यं वीतरागपदमर्चयतो मे ।
किं वृथा मनसि बिभ्रति खेदं धर्मकल्पतरवो गुरवोऽमी ॥

अद्य मे फलवती पितुराशा मातुराशिषि शिखाऽङ्कुरिताऽद्य ।
यद्युगादिजिनयात्रिकलोकं पूजयाम्यहमशेषमखिन्नः ॥

एवंविधस्तु संयोगः सुकृतैरेव लभ्यते ।
नहि चिन्तामणिः प्रायो निष्पुण्यस्य गृहे वसेत् ॥

[5]कल्पद्रुमस्तरुरसौ तरवस्तथान्ये चिन्तामणिर्मणिरसौ मणयस्तथान्ये ।
धिग्जातिमेव ददृशे बत यत्र नेमिः श्रीरैवतेशादिवसो दिवसास्तथान्ये ॥

अभङ्गवैराग्यतरङ्गपूर्णे हृदि त्वदीये यदुवंशरत्न ।
कथं कृशाङ्ग्योऽपि हि मान्तु हन्त यस्मादनङ्गोऽपि पदं न लेभे ॥

---

१ हरिहरकाव्यप्रशंसा । २ वीरधवलस्वर्गमने वस्तुपालस्य विलाप. । ३ चाहमाननरेन्द्रोदयसिंह-मन्त्रियशोवीरोपश्लोकनपद्यानि । ४ नागपुरीयपूनडीयसङ्घार्चनसमये । ५ तीर्थङ्करस्तुत्यादिपद्यानि ।

त्वत्प्रासादकृते नीडे वसन्शृण्वन्गुणांस्तव ।
सद्गुद्दर्शनतुष्टात्मा भूयासं विहगोऽप्यहम् ॥
यद्दाये द्यूतकारस्य यत्प्रियायां वियोगिनः ।
यद्राधावेधिनो लक्ष्ये तद्ध्यानं मेऽस्तु ते मते ॥
अधीता न कला काचिन्न च किञ्चित्कृतं तपः ।
दत्तं न किञ्चित्पात्रेभ्यः गतं च मधुरं वयः ॥
आयुर्जीवितवित्तेषु स्मृतिशेषेषु या मतिः ।
सैव मे जायते पूर्वं न दूरं परमं पदम् ॥
आरोहन्ती शिरः स्वान्तादौन्नत्यं तनुते जरा ।
शिरसः स्वान्तमायान्ती दिशते नवतां पुनः ॥
वञ्चयित्वा जनानेनान् सुकृतं गृह्यते श्रिया ।
तत्ततो गृह्यते येन स तु धूर्तधुरन्धरः ॥
नृपव्यापारपापेभ्यः सुकृतं स्वीकृतं न यैः ।
तान्धूलिधावकेभ्योऽपि मन्येऽधमनराधमान् ॥
न कृतं सुकृतं किञ्चित् सतां संस्मरणोचितम् ।
मनोरथैकसाराणामेवमेव गतं वयः ॥
यन्मयोपार्जितं पुण्यं जिनशासनसेवया ।
जिनशासनसेवैव तेन मेऽस्तु भवे भवे ॥
या रागिणि विरागिण्यः स्त्रियस्ताः कामयेत कः ।
तामहं कामये मुक्तिं या विरागिणि रागिणी ॥
शास्त्राभ्यासो जिनपदनतिः सङ्गतिः सर्वदार्यैः
सद्वृत्तानां गुणगणकथनं दोषवादे च मौनम् ।
सर्वस्यापि प्रियहितवचो भावना चात्मतत्त्वे
सम्पद्यन्तां मम भवभवे यावदाप्तोऽपवर्गः ॥

---

१ श्रीनाभेयध्यानावसरे । २ पलितं दृष्ट्वा वस्तुपालस्योक्तय । ३ देहावसानसमये । सुभाषितावल्या नामोल्लेखं विना पादव्यत्यासेनोदाहृतमिदम् ।

# APPENDIX III

# श्रीवस्तुपालकीर्त्तिदानप्रवन्धाः

## I

( उपदेशतरङ्गिणीतः )

श्रीवस्तुपालः प्रतिवर्षं वारत्रयं सर्वचतुर्विधसङ्घपूजां करोति स्म। एकदा सङ्घार्चायां जायमानायां एको दरिद्रो द्विजः प्राह–देव! कल्पद्रुमावतार इव सर्वलोकवाञ्छितं ददानो दृश्यसे, एकवेलं ममापि सम्मुखमवलोकय, यथा दारिद्र्याय जलाञ्जलिं ददामि। तदा मन्त्रिणोक्तम्–रे! किमप्युद्वरितवस्त्रमस्ति ?, एका वस्त्रबन्धनस्थूलपल्यस्ति, देहि। सा द्विजस्यार्पिता। तेन विलोक्योक्तम्—

क्वचित् सूत्रं क्वचित् तूलं कार्पासास्थि क्वचित् क्वचित्।
देव! त्वदरिनारीणां कुटीतुल्या पटी मम॥

मन्त्रिणोक्तम्–पुनर्वद, सप्तदशवारमुक्तम्। १७ शतानि द्रम्माणां समर्पितानि। एकदा यात्रारम्भे वन्दनार्थागतमन्त्रिणा सभायां किञ्चिन्निद्रायमाणनरचन्द्राचार्यो वादितः प्राह–नाहं निद्रायमाणः, किन्तु नेत्रे निमील्य लक्ष्मीनारायणयोः समुद्रमध्यस्थयोः परस्परालापं शृण्वन्नस्मि।

यथा–लक्ष्मि! प्रेयसि! केयमास्यशितिता वैकुण्ठ! कुण्ठोऽसि किं
नो जानासि पितुर्विनाशमसमं सङ्घोत्थितैः पांसुभिः ?।
मा भीर्भीरु! गभीर एव भविताऽम्भोधिश्चिरं नन्दतात्
सङ्घेशो ललितापतिर्जिनपतेः स्नात्राम्बुकुल्यां सृजन्॥

बालचन्द्रक्षुल्लकेन श्रीवस्तुपालो वर्णितः—

गौरी रागवती त्वयि त्वयि वृषो बद्धादरस्त्वं पुन-
र्भूत्या त्वं च समुल्लसद्गुणगणः किं वा बहु ब्रूमहे।
श्रीमन्त्रीश्वर! नूनमीश्वरकलायुक्तस्य ते युज्यते
बालेन्दुं चिरमुच्चकै रचयितुं त्वत्तोऽपरः कः क्षमः॥

तदनु मन्त्रिणा भट्टारकपादोपवेशनं कारितं बालचन्द्रस्य।

एकदा अमरचन्द्रसुनौ पर्षदि तत्कालकृतनव्यश्लोकैर्व्याख्यानं कुर्वति त्रिपदी प्रोक्ता—

अस्मिन्नसारे संसारे सारं सारङ्गलोचना ।

चन्दनार्थमागच्छता द्वारस्थेन मन्त्रिणा श्रुता । अहो ! रागी स्त्रीकथाकृन्मुनिः, इति ध्यात्वा न वन्दितः । ज्ञातमन्त्रिचित्ताभिप्रायेणामरचन्द्रेणोक्तम्—

अस्मिन्नसारे संसारे सारं सारङ्गलोचना ।
यत्कुक्षिप्रभवा एते वस्तुपाल ! भवादृशाः ॥

तुष्टेन पादोपवेशनं कारितम् ।

श्रीशत्रुञ्जयतीर्थे संघसमक्षं श्रीवस्तुपालमन्त्रिणि आरात्रिके क्रियमाणेऽर्थिनां मन्त्रिमध्ये झम्पानं दृष्ट्वा सोमेश्वरकविः प्राह—

इच्छासिद्धिसमुन्नते सुरगणे कल्पद्रुमैः स्थीयते
पाताले पवमानभोजनजने कष्टं प्रणष्टो बलिः ।
नीरागानगमन् मुनीन् सुरभयश्चिन्तामणिः क्वाप्यगात्
तस्मादर्थिकदर्थनां विपहतां श्रीवस्तुपालः क्षितौ ॥

सोमेश्वरस्य सहस्रं ददौ । सन्तुष्टेन सोमेश्वरेण पुनरभाणि—

के निधाय वसुधातले धनं वस्तुपाल न यमालयं गताः ।
त्वं तु नन्दसि निवेशयन्निदं दिक्षु धावति जने क्षुधावति ॥

पुनरपि सहस्रं ददौ ।

तथाऽरिसिंहकविः—श्रीवासाम्बुजमाननं परिणतं पञ्चाङ्गुलीच्छद्मतो
जम्बुर्दक्षिणपञ्चशाखमयतां पञ्चापि देवद्रुमाः ।
वाञ्छापूरणकारणं प्रणयिनां जिह्वैव चिन्तामणि-
र्जाता यस्य किमस्य शस्यमपरं श्रीवस्तुपालस्य तत् ॥

त्रिसहस्री दत्ता ।

एकदा तुष्टेन श्रीवीरधवलेन मन्त्रिणे दशलक्षी प्रसादे दत्ता । सा तु तेन गृहाद्वर्गेव दत्ता, तदा कश्चित्कविः—

श्रीमन्ति दृष्ट्वा द्विजराजमेकं पद्मानि सङ्कोचमवाप्नुवन्ति ।
समागतेऽपि द्विजराजलक्षे सदा विकासी तव पाणिपद्मः ॥

इति स्तूयमानो लज्जयाऽधो विलोकयति स्म । तदा नानाव्यकविः प्राह—

एकस्त्वं भुवनोपकारक इति श्रुत्वा सतां जल्पितं
लज्जानम्रशिरा धरातलमिदं यद्वीक्षसे वेद्मि तत् ।
वाग्देवीवदनारविन्दतिलकश्रीवस्तुपाल ! ध्रुवं
पातलाद्बलिमुद्दिधीर्षुरसकृन्मार्गं भवान्मार्गति ॥

